# जैनरामायणम् ।

## श्रीहेमचन्द्राचार्य्य विरचितम् ।

फोर्ट-उइलियम काळेजस्य पण्डित

श्रीजगन्नाथशुक्लेन परिशोधितम् ।

उपाध्याय श्रावकसमुदायलम्बित

आजिमगञ्ज निवासिनः

श्रीयुतराय धनपतिसिंहबाहादुरस्याज्ञया

कलिकातानगरे

जैनाख्ययन्त्रे

१९५० संवत्सरे ।

मुद्रितम् ।

श्रीजिनाय नमः।

पुरे बालूचराख्येऽथ मुर्शिदाबादसन्निधौ।
आसन्दूगरगोत्रीयाः सोदरा भ्रातरस्त्रयः ।१।
उसावालेति विख्याताः स्वधर्मनिरताः सदा ।
बुधसिंहाभिधस्तेषां ज्येष्ठः श्रेष्ठतरो गुणैः ।२।
मध्यमो नयमल्लनामा यवीयान् रणसिंहकः ।
बुधसिंहाभिधस्यासीज्जन्मपौष्यां विधोस्तिथौ ।३।
द्वीपरामाब्धिचन्द्राब्दे द्विजराभिपतेरथ ।
कौशेयविद्रुमयोः स व्यवसायं तदाऽकरोत् ।४।
सोऽगाच्चापुनरावाप्तिं बुधसिंहस्तु जन्मनः ।
रन्ध्ररामगजक्ष्माब्दे वर्षे विषय निस्पृहः ।५।
बुधसिंहाभिधस्यास्तां पुत्रौ परमधार्मिकौ ।
बाहादुरसिंहको ज्येष्ठः प्रतापसिंहः कनिष्ठकः ।६।
ययोः प्रतापस्त्वद्यापि प्रचकास्ति दिगन्तरम् ।
प्रतापस्य तयोर्मध्ये तपनोऽभूद्द्वितीयकः ।७।
तस्याप्यास्तां शुभौ सूनू ज्येष्ठो लक्ष्मीपतिस्तयोः ।
आसीत् कनिष्ठो धनपतिर्द्वौ शीलगुणान्वितौ ।८।
नाम्ना धनपतिसिंहो यः स्वगुणस्य महीयसः ।
प्रतापसिंहाख्यस्य लघु धार्मिकः शीलसंयुतः ।९।

निरतः श्रावके धर्मे नयशाली जितेन्द्रियः ।
हेमाचार्यकृतं यस्तु रामायणमसुद्रयत् ॥१०॥
यस्तात्मधर्मसंवृद्ध्यर्थं धर्मग्रन्थरुचिं गतः ।
कर्मो धनपतिस्तेन धनपतेरर्थिको भुवि ॥११॥
हेमाचार्यकृतं यस्मात् मुद्रणेनाधिकं कृतम् ।
रामायणं यदालोक्य मन्दीयुर्यतयो मुदम् ॥१२॥

खरामरन्ध्रेन्दुमितेऽत्र फाल्गुणे
सितेतिथौ पूर्ण मभूदिदं विधोः ।
श्री विक्रमादित्य नृपोत्तमाब्दे
मुद्राक्षरै मुद्रित मेतदेव ॥१३॥

# अथ रामायणम्।

अथ श्रीसुव्रतस्वामी जिनेन्द्रस्त्रिजगद्द्युतेः।
हरिवंशमृगाङ्कस्य तीर्थे सञ्जातजन्मनः ॥१॥
बलदेवस्य पद्मस्य विष्णोर्नारायणस्य च।
प्रतिविष्णो रावणस्य चरितं परिकीर्त्यते ॥२॥
अस्यैव जम्बूद्वीपस्य दक्षिणे भरते पुरी।
नाम्ना ख्याता विनीतेति शिरोमणिरिवावनेः ॥३॥
अस्यामिक्ष्वाकुवंशस्य विततच्छत्रसन्निभः।
विश्वसन्तापहरणाज्जज्ञे सगरोऽजनि ॥४॥
सोऽपरेद्युः समं भूपैर्वाह्याल्यां वाहकेलये।
एकं भूकलनाकृष्य ययौ सर्वकलानिधिः ॥५॥
तत्र विक्रमयामास चतुरन्तं तुरङ्गमम्।
उत्तरोत्तरधारा सु क्रमेणारोपयच्च सः ॥६॥
आरूढः पञ्चमीधारामुत्पपात नभस्तले।
वल्गादिसंज्ञानभिज्ञो भूतोऽभूतैरिवाश्रितः ॥७॥
सगरं सोऽपहृत्याऽश्वोऽश्वरूप इव राक्षसः।
महारण्ये प्रचिक्षेप कालाक्षेपेण रंहसा ॥८॥

वल्गां सामर्षमाकृष्योरश्वान्धाकृष्य पार्थिवः ।
दधार सगरोऽश्वन्तं जवं दत्वोत्ततारच ॥९॥
विधुरस्तुरगः सोऽपि पपात पृथिवीतले ।
पृथ्वीनाथोऽपि पादाभ्यामेवगन्तुं प्रचक्रमे ॥१०॥
यावत्किञ्चिद्ययौ तावद्ददर्शैकं महासरः ।
आदित्यकरपर्यस्तां भूमिष्टामिवचन्द्रिकाम् ॥११॥
तत्र श्रमापनोदाय ममौ वन्य इव द्विपः ।
स्वादु स्वच्छं पद्मगन्धि शीतञ्च सपयःपपौ ॥१२॥
निर्ययौ सरसस्तस्मात्स्थितस्तो तीरसीमनि ।
ददर्श चैकां युवतिं जलदेवीमिवाऽग्रतः ॥१३॥
तां नवाम्भोजवदनां नीलोत्पलविलोचनाम् ।
तरङ्गायित लावण्य जलान्धिक्ष्युगस्तनी ॥१४॥
स्मेरकोकनदोद्दाम पाणिपादमनोरमाम् ।
शरीरिणीं सरो लक्ष्मीं स पश्यन्नित्यचिन्तयत् ॥१५॥
अप्सराः किं व्यन्तरी किं किमाहो नागकन्यका ।
विद्याधरी वा किमियं न सामान्येदृशीभवेत् ॥१६॥
न तथा हृदयानन्दं करोति सरसी जलम् ।
यथा दर्शनमेतस्याः सुधाम्पृष्टिसहोदरम् ॥१७॥
तथापि ददृशे राजा राजीवदलचक्षुषा ।
ततः सञ्चारितेनेवाऽनुरागेण तदैव हि ॥१८॥

सद्योपि कामविधुरा सा सखीभिः कथञ्चन ।
संस्थाप्यो नीयतावास स्नानायाय मिराजिनी ॥१८॥
सगरोपि सरस्तीरे शनैर्गच्छन् स्मरातुरः ।
एत्य कञ्चुकिना नत्वा चैव सूचे कृताञ्जलिः ॥२०॥
स्वामिन्निहैवभरतक्षेत्रे वैताढ्यपर्वते ।
वल्लभं सम्पदामस्ति पुरं गगनवल्लभम् ॥२१॥
विद्याधरपतिस्तत्र ख्यातो नाम्ना सुलोचनः ।
विलोचन सखः पुर्यामलकायामिवाऽभवत् ॥२२॥
सहस्रनयनोनाम तस्यास्ति तनयेनयी ।
सुकेशा दुहिता चेयं विश्वस्त्रैणशिरोमणिः ॥२३॥
नैमित्तिकेन चैकेन जाता मात्रापि वर्णिता ।
स्त्रीरत्नमेषा रूपिणी भविनी चक्रवर्त्तिनः ॥२४॥
इतश्च पूर्णमेघेन रथनूपुर भूभुजा ।
भूयोभूयोऽयाचितेव सुद्गोढुमनुरागिणा ॥२५॥
तावितयंददाने च हर्तुकामोहठादपि ।
पूर्णमेघो मेघ इव गर्जन् योद्धुमुपाययौ ॥२६॥
पूर्णमेवश्चिरतरं योधयित्वा सुलोचनम् ।
चक्रे दीर्घभुजोदीर्घ निद्रामुद्रितलोचनम् ॥२७॥
स्वधनं तत्र दृष्टोपादायभगिनीमिमाम् ।
सहस्रनयनोवागान्महान्तिमिहावनौ ॥२८॥

सरोवरे मयासेह क्रीडन्त्यात्वमवीक्षितः ।
क्षिप्ताचाशुकामेन विकारं वेदनामयम् ॥२९॥
घर्मार्त्तेव स्वेदवती स्तब्धापाञ्चालिकेव च ।
शीतार्त्तेव सपरेणं वा श्लेष्मले स्खलत्स्वरा ॥३०॥
क्षणादक्षाख्यमेवं भानुमानिव पद्मिनि ।
उदस्तु शोकमग्नेव योगिनीव कृतस्थिता ॥३१॥
क्षणादेव स्यावैहित्यप्रच्छेदे तवदर्शनात् ।
तत्राय स्वजरांक्षात्स्वयावत्सा विपत्तुते ॥३२॥
सोऽविदत्खेवपदमेषद सत्तदुनोऽपि सः ।
आययौ नभस्स्तं नमस्कृत्य चक्रिणम् ॥३३॥
सोऽनुमान्य निजावासे प्रेषीत् सगरचक्रिणः ।
स्त्रीरत्नमसुकेशा या दानाव्रतमतोषयन् ॥३४॥
ततश्च तौ विमानेन सहस्रैवगणचक्रिणौ ।
वैताढ्यशैलेय यतुः पुरं गगनवल्लभम् ॥३५॥
निवेश्य पैतृके राज्ये सहस्रनयनं ततः ।
सर्वविद्याधराधीशं व्यवत्तधरणीधरः ॥३६॥
स्त्रीरत्नं तदुपादाय सगरश्चक्रवर्त्यपि ।
जगाम साकेतु पुरं पुरन्दरपराक्रमम् ॥३७॥
सङ्गीतकैर्नाटकैश्च विनोदैरपरैरपि ।
ततश्चारंस्त सगरः साम्राज्यश्रीलताफलैः ॥३८॥

अथ साकेत नगरोद्याने जितजिनेश्वरः।
भगवान् समवासार्षीत्सेव्यमानः सुरासुरैः ॥३९॥
वासवादिषु देवेषु सगरादिषु राजसु।
आसीनेषु यथा स्थानं विदधौ देशनां विभुः ॥४०॥
तदा च वैताढ्यगिरौ पूर्णमेघं सहस्त्र हक्।
स्मरन् पितृवधं क्रुद्धोऽवधीतार्क्ष्य इवोरगम् ॥४१॥
पूर्णमेघात्मजस्तस्मान्नष्टोऽथ घनवाहनः।
तत्रा जगाम समव सरणं शरणेप्सया ॥४२॥
सत्रिः प्रदक्षिणीकृत्य भगवन्तं प्रणम्य च।
चमपादमुपाविक्ष क्रुपङ्कमिवाध्वगः ॥४३॥
तस्यानुपदमेवाथ सहस्राक्षदुदायुधः।
आगात्समवसरणेऽपश्यच्च घनवाहनम् ॥४४॥
प्रशान्तकोपस्त्यक्त्वा स्तोःप्रभावात्परमेष्ठि तुः।
नत्वा प्रदक्षिणापूर्वं यथा स्थातुमुपाविशत् ॥४५॥
सदरश्चक्रभृदथ पप्रच्छपरमेश्वरम्।
किं वैरकारणं स्वामिन् पूर्णमेघसुनेत्रयोः ॥४६॥
आचख्यौ भगवानेव मादित्याते पुरे पुरा।
अभवद्भावनोनामद्रव्यकोटीश्वरो वणिक् ॥४७॥
स्वसूनोर्हरिदासस्य सार्पयित्वा खिलं धनम्।
देशान्तरं वणिज्यायै जगाम श्रेष्टिभावनः ॥४८॥

विदेशे द्वादशाब्दानि स्थित्वोपार्य्यमितं धनम् ।
आययौ भावनः श्रेष्ठी तस्थौ च नगराद्बहिः ॥४९॥
तत्र मुक्त्वा पुरीवारं मेकाक्यपि हि भावनः ।
निशायां यौ निजे सद्मन्युत्कण्ठाद्धिवलीयसी ॥५०॥
प्रविशत् हरिदासेन चौरोऽसावितिशङ्कया ।
निहतः खड्गघातेन विमर्षः काल्यमेधसाम् ॥५१॥
स्वस्य व्यापादकं ज्ञात्वा तदानीमपिभावनः ।
तत्कालकलितद्वेषः कामधर्मं मुपाययौ ॥५२॥
स ज्ञात्वा पितरं पश्चात्पश्चात्तापकदर्थितः ।
चकार प्रेतकार्य्याणि सपत्यस्तेन कर्मणा ॥५३॥
विपेदे हरिदासोऽपि गते काले कियत्यपि ।
दुःखदान् द्वावपतितोऽभ्रमतुः कतिचिद्भवान् ॥५४॥
किञ्चिच सुकृतं कृत्वा जीवोऽभूद्भावनस्य तु ।
पूर्णमेघो हरिदासजी वस्यासीत् सुलोचनः ॥५५॥
इति प्राग्जन्मसंसिद्धं पूर्णमेघसुनेत्रयोः ।
वैरं प्राणान्तिकं राजन्नैहिकं त्वानुषङ्गिकम् ॥५६॥
भूयोऽपि सगरोऽप्राक्षीत्तस्मन्त्वोर्ह्यनयोर्मिथः ।
को वैरहेतुः स्नेहस्य सहस्राक्षे कुतो मम ॥५७॥
स्वाम्यूचे दानशीलस्त्वं परिव्राट् रम्भिकाभिधः ।
प्रागभवेभूस्तथा भूतां शिष्यौ शशावलीत्विमौ ॥५८॥

अभूत्रातिविनीतत्वाद्रावलिस्तेतिवल्लभः ।
गोधेनुसेकामक्षीणादन्यदा द्रविणेन सः ॥५९॥
वेगन्दो स्वामिनः ज्ञात्वा कठोरहृदयः शशी ।
अन्तराले पतित्वैव तां क्षीणातिस्मधेनुकाम् ॥६०॥
केशाकेशि मुष्टामुष्टि दण्डादण्डितयो स्ततः ।
युद्धं ग्रवृत्ते घोरं शशिना चावलिर्हतः ॥६१॥
शशीचिरं भवं भ्रान्त्वा यज्ञेसौ मेघवाहनः ।
आवलिस्तु सहस्रान्तस्तदिदं वैरकारणम् ॥६२॥
श्वान्तादान प्रभावेन रंभकोपि गतीं शुभाम् ।
चक्रस्त्वं च सहस्राक्ष स्नेहः प्राग्जन्मभूयते ॥६३॥
अथ रत्नपतिर्भीमो निपत्यास्तवपर्दि ।
उच्छायालिङ्गरभसाम्मेघवाहनमब्रवीत् ॥६४॥
पुष्करद्वीपभरतक्षेत्रो वेताद्ध्यपर्वते ।
प्राग्भवे काञ्चनपुरे विद्युद्दंष्ट्रो नृपो भवम्॥६६॥
तस्मिन् भवे ममा भूस्त्वं तनयो रतिवल्लभः ।
अत्यन्तं वल्लभोवत्स साधुदृष्टोसि सम्प्रति ॥६७॥
तद्देवं संप्रत्यपि मे पुत्रोसि परिगृह्यताम् ।
सैन्यं मदीयं त्वदीयमथान्यदपि यन्मसः ॥६८॥
लवणोदे पयोराशौ दुर्जयोद्य सदामपि ।
योजनानां सप्तशतींदिक्षु सर्वा सुविस्तृतः ॥६९॥

राक्षसद्वीप इत्यस्ति सर्वद्वीपशिरोमणि ।
तदन्तरे त्रिकूटाद्रिर्भूमिनाभो सुमेरुवत् ॥७०॥
महद्भिर्वलयाकारो योजनानि नवोन्नतः ।
पञ्चाशतं योजनानि विस्तीर्णोऽप्यतिदुर्गमः ॥७१॥
तस्योपरिष्टात् सौ वर्णप्राकारागृह तोरणा ।
मया लङ्केतिनाम्ना पूर धुनैर्वास्तिकारिता ॥७२॥
षड्योजनानि भूमध्य मतिक्रम्य चिरन्तनी ।
शुद्धस्फटिकवप्राङ्का नानारत्नमलालया ॥७३॥
सपादयोजनशतं प्रमाणाप्रवरापुरी ।
अस्म पातालतलङ्केति विद्यते चातिदुर्गमा ॥७४॥
पुरीद्वयमिदं वत्सादत्तत्वं नृपतिर्भव ।
भवत्वाद्येवते तीर्थनाथदर्शन जं फलम् ॥७५॥
इत्युक्त्वा राक्षसपतिर्माणिक्यैर्नवभिः कृतम् ।
ददौ तस्मै महाहारं सद्योविद्याच राक्षसीम् ॥७६॥
भगवन्त नमस्कृत्य तदैव घनवाहनः ।
आगत्य राक्षसद्वीप राजाभूल्लङ्कयोस्तयोः ॥७७॥
राक्षसद्वीपराज्येन राक्षस्याविद्ययापि च ।
तदादि तस्य वंशोपि ययौ राक्षसवंशताम् ॥७८॥
विस्मापिता मित्रबलः सुनामैवैकविक्रमः ।
व्यधत्त लङ्कयोराज्यं सुचिरं घनवाहनः ॥७९॥

समहारक्षसे राज्यं सुग्रीवोदत्वा स्वसूनवे ।
अजितस्वामिपादान्ते परिव्रज्य ययौ शिवम् ॥८०॥
महारक्षा अपि चिरं राज्यं भुक्त्वा स्वनन्दने ।
देवरक्षसि संस्थाप्य प्रव्रजश्च ययौ शिवम् ॥८२॥
रक्षो द्वीपाधिपेष्वेऽवमसंख्येषु गतेषु तु ।
श्रेयांस तीर्थे भूत्कीर्त्तिधवलो राक्षसेश्वरः ॥
तदा च वैताढ्यगिरौ पुरे मेघपुराभिधे ।
विद्याधरनरेन्द्रो भूदतीन्द्रो नामविश्रुतः ॥८३॥
श्रीमत्यां तस्य कान्तायां श्रीकण्ठोनाम नन्दनः ।
देवीति नाम्ना दुहिता चाभूद्देवीवरूपतः ॥८४॥
विद्याधरेन्द्र स्तां पुष्पोत्तरो रत्नपुरेश्वरः ।
सूनोः पद्मोत्तरस्यार्थे ययाचे चारुलोचनाम् ॥८५॥
गुणिने श्रीमतेप्यस्मैतामतीन्द्रो ददौ नहि ।
ददौ कीर्त्तिधवलाय किन्तु दैवनियोगतः॥८६॥
तां कीर्त्तिधवलोढ़ान्तु श्रुत्वा पुष्पोत्तरो नृपः ।
वैरायते स्मातींद्रेण श्रीकण्ठे न च मानदः ॥८७॥
श्रीकण्ठेनैकदामेरो र्निवृत्तेन व्यदैच्यत ।
पुष्पोत्तरस्य दुहिता पद्मा पद्मे वरूपतः ॥८८॥
मनोभवविकाराब्धि समुल्लासन दुर्दिनम् ।
अन्योन्यमनुरागो भूत्तयोः श्रीकण्ठपद्मयोः॥८९॥

तिष्ठतेस्म कुमारी सा श्रीकण्ठायोन्मुखाम्बुजा ।
स्वयम्बरस्रजमिवः क्षिपन्तीस्निग्धया दृशा ॥८०॥
विज्ञाय तदभिप्रायं श्रीकण्ठस्तां स्मरातुरः ।
आदाय व्योममार्गेण गन्तुं प्रवृत्ते द्रुतम् ॥८१॥
पद्मां हरति कोपीति पूत्कुर्वन्तिस्म चेटिका ।
पुष्पोत्तरोपि सन्नह्यत्वधावत्सबलो बली ॥८२॥
श्रीकण्ठोपि द्रुतं कीर्त्तिं धवलं शरणं ययौ ।
पद्माहरणवृत्तान्तं कथयामास चाखिलम् ॥८३॥
पुष्पोत्तरोपि तत्राशु प्राप सैन्यैर्निरन्तरैः ।
आशाः प्रच्छादयन्नद्रियुगान्त इव सागरः ॥८४॥
दूतेन कीर्त्तिधवलः पुष्पोत्तरमभाषतः ।
अविमृश्य प्रयासोयं मुधावः सांपरायिकः ॥८५॥
कन्याह्यवश्यं दातव्या कस्मैचन तया यदि ।
स्वयं वृतोऽसौ श्रीकण्ठस्तदासौ नापराध्यति ॥८६॥
नतद्वो युज्यते योद्धुं बुद्धास्वदुहितुर्मनः ।
कर्तुं वधूवरोद्वाह कृत्यमेवतु सांप्रतम् ॥८७॥
दूतीमुखेन पद्मापि तदैवेति व्यजिज्ञपत् ।
वृतो मया स्वयमयं हृताहं नामुना पुनः ॥८७॥
इति पुष्पोत्तरं श्रुत्वा शान्तकोपो भवत्क्षणात् ।
प्रायो विचार चञ्चूनां कोपः सुप्रशमः खलु ॥८८॥

श्रीकण्ठपद्मयो स्तस्मैवोत्सवेन महीयसा ।
कृत्वा विवाहं प्रययौ निजं पुष्पोत्तरः पुरम् ॥१००॥
श्रीकण्ठकीर्त्तिधवलोऽब्रवीदत्रैव तिष्ठत ।
तावच्छैले युष्माकं भूयांसो विद्विषोऽधुना ॥१॥
अस्यैव राक्षसद्वीपं स्यादूरेण महोदधि ।
विद्यते वानरद्वीपो योजनत्रिशतीमितः ॥२॥
अन्येपि वर्वरकूलसिंहलप्रमुखाः सखे ।
द्वीपा मदीयास्तिष्ठन्ति भूष्टस्वः खण्डसन्निभाः ॥३॥
तेषामेकत्रकुत्रापि राजधानीं निधाय भोः ।
सुखमाः स्वाविदूरत्वादवियुक्तो मया समम् ॥४॥
न यद्यपि द्विषद्भ्यस्ते भयमस्ति मनागपि ।
तथाप्यस्मद्विप्रयोगभयान्नोगन्तु मर्हसि ॥५॥
सस्नेहमिति तेनोक्त स्तद्वियोगातिकातरः ।
श्रीकण्ठोवानरद्वीपनिवासं प्रत्यपद्यत ॥६॥
कृत्वाऽधिवानरद्वीपं किष्किन्धाद्रौ महापुरीम् ।
किष्किन्धानामतद्राजेत्र तं कीर्त्तिधवलोन्यधात्॥७॥
अद्राक्षीद्भ्राम्यत स्तत्र महादेहान्फलाशिनः ।
भूयं सो वानरान् रम्यान् श्रीकण्ठपृथिवीपतिः ॥८॥
तेषाममारिमाघोष्य सोन्नपानाद्य दापयन् ।
सचक्रुस्तानथान्येपि यथा राजा तथा प्रजाः ॥९॥

चक्रुश्चिले वले ध्येवं ध्वजछत्रादि लक्ष्मसु ।
विद्याधर वानरास्ते तदा प्रभृति कौतुकात् ॥१०॥
वानरद्वीपराज्येन वानरैश्चिच्यभि स्तथा ।
वानरा इति कीर्त्त्यन्ते तथा विद्याधरा अपि ॥११॥
श्रीकण्ठस्य सुतोजज्ञे वज्रकण्ठोभिधानतः ।
सोरकण्ठासुविशालासु सर्वला कुण्ठविक्रमः ॥१२॥
नन्दीश्वरेथ श्रीकण्ठोर्यात्रायैशास्वतार्हताम् ।
अमरान् गच्छतोऽद्राक्षीदास्यानीमास्थितोनिजाम् ॥
वाजीव ग्रामपट्टस्थो वाजिनां मार्ग यायिनाम् ।
तेषां दिदिषदां सोथ्यऽन्वचालीभक्तितद्वनः[1] ॥१४॥
विमानं गच्छतस्तस्य स्खलितं मानुषोत्तरे ।
तरङ्गिणी वेगइव मार्गवर्त्तिनि पर्वते ॥१५॥
प्राग्जन्मनि मया तेपे तपोऽल्पं खलु ते नमे ।
नन्दीश्वरार्हद्यात्रायां ना पूर्यत मनोरथः ॥१६॥
इति निर्वेदमापन्नः प्राब्राजीत्सद्य एव सः ।
तपस्तीव्रतरं तप्त्वा सिद्धिक्षेत्रमियायच ॥१७॥
श्रीकण्ठतो वज्रकंठादिष्वतीतेष्वऽनेकशः ।
मुनिसुव्रततीर्थेऽभूद्यतोदधि रथोनृपः ॥१८॥

---

(१) अन्वगाद्भक्तियुतः । इति वा पाठः ।

लङ्कापुर्यामपि तदा समभूद्राक्षसेश्वरः ।
तडित्केश इति नाम्ना नक्षे स्नेह तयोरपि ॥१९॥
अपरेद्युः स्तडित्केशः सान्तःपुरवधूजनः ।
ययौ क्रीडितु मुद्याने वरे नन्दननामनि ॥२०॥
क्रीडासक्ते तडित्केशे कोप्युत्तीर्य कपिर्द्रुमात् ।
श्रीचन्द्रायास्तन्महिष्या विलिलेख नखैः कुचौ ॥२१॥
रोषोच्छ्वसितकेश स्तं तडित्केशः प्लवङ्गमम् ।
जघानैकेन बाणेनाऽसह्यो हि स्त्री पराभवः ॥२२॥
बाणप्रहारविधुरः किञ्चिद्गत्वा प्लवङ्गमः ।
एकस्य प्रतिमास्थस्य साधोरग्रे पपातसः ॥२३॥
सोदात्तस्मै नमस्कारं परलोकाध्वगं बलम् ।
श्रुत्वा च तत्प्रभावेणाब्धि कुमारो बभूवसः ॥२४॥
प्रागजन्मसोऽवधेर्ज्ञात्वाभ्येत्यावं दिष्ट तं मुनिम् ।
वन्दनीयः सतां साधुरुपकारी विशेषतः ॥२५॥
अन्यानपि तडित्केश भटैस्तत्र प्लवङ्गमान् ।
हन्यमानात्सपेच्चिष्ट सद्यः कोपेन चा ज्वलत् ॥२६॥
महाप्लवङ्गरूपाणि विकृत्यानेकशश्च सः ।
वर्षं स्तरुशिलाजालै रुपदुद्राव राक्षसान् ॥२७॥
ज्ञात्वा दिव्यप्रयोगन्तु तडित्केशस्तमुच्चकैः ।
आनर्चोवाच कोसीति किमुपद्रवसीति च ॥२८॥

ततः सोऽब्धि कुमारोऽपि शान्तकोपस्तदर्चया ।
स्ववधञ्च नमस्कार प्रभावञ्च शशंसतम् ॥२९॥
लङ्केश स्तेन देवेन सहैवोपेत्य तं मुनिम् ।
इत्यपृच्छत्युभो वैर हेतुः कः कोपिना मम ॥३०॥
आचख्यो मुनिरप्येवं श्रावस्त्यां मन्त्रिनन्दनः ।
दत्तो नाम पुराभूत्त्वं काश्यामेषतु लुब्धकः ॥३१॥
त्वमुपात्तपरिव्रज्योऽन्येद्युर्वाराणसीमगाः ।
दृष्टोनेनापशकुन मित्याहत्य निपातितः ॥३२॥
माहेन्द्रकल्पदेवोभू स्त्वमत्वा चेदिगिहामवः ।
भ्रात्वा नरकमेषोभूत्कपिस्त द्वैरकारणम् ॥३३॥
वन्दित्वातं महासाधु मसामान्योपकारिणम् ।
अनुज्ञाप्य च लङ्केशं सोथदेवस्तिरोदधे ॥३४॥
तदाकर्ण्य तडित्केशः सुकेशे तनये निजम् ।
राज्यं न्यस्य प्रवव्राज वव्राज च परं पदम् ॥३५॥
किष्किन्धाराजप्रमाधाय पुत्रे किष्किन्धनामनि ।
दीक्षां घनोदधिरधोऽप्यादाये यावनिर्वृतिम् ॥३६॥
इतश्च वैताढ्यगिरौ नगरे रथनूपुरे ।
अभूत्तदानीमशनि वेगो विद्याधरेश्वरः ॥३७॥
तस्यापि सूनुर्विजय सिंह इत्यभवज्जयी ।
विद्युद्वेगो द्वितीयस्तुतद्दोर्दण्डविवा परौ ॥३८॥

गिरौ तत्रैव चादित्यपुरे मन्दिरमाल्य भूत् ।
विद्याधरनृपस्तस्य श्रीमालेति च कन्यका ॥३८॥
तस्या स्वयम्बरे तेनाहूताविद्याधरेश्वराः ।
ज्योतिर्पीवाधिविमान मधिमञ्च मुपाविशन् ॥४०॥
कथ्यमानान् प्रतीहार्या तान् विद्याधरपुङ्गवान् ।
पश्यन्ती दृष्ट्या श्रीमाला कुल्याहृत्यानिवाम्भसा ॥४१॥
अन्यविद्याधरान् सर्वानतिक्राम्य क्रमेण सा ।
गत्वा चतस्थे किष्किन्धे जाह्नवीवपयोनिधौ ॥४२॥
तस्य कंठे निचिक्षेप श्रीमाला वरमालिकाम् ।
भविष्यदोत्खलता क्षेप सत्यं कारमिवानयम् ॥४३॥
चुक्रोधविजयसिंहोथ सिंहवत्प्रियसाहसः ।
भ्रकुटीभीषणमुखः सरोपमिदमभ्यधात् ॥४४॥
निर्वासिता पुराप्येते सदा दुर्नयकारिणः ।
वैताढ्यराजधानीतः सुरानगरादिवद्स्यवः ॥४५॥
तत्केनास दूहा नीता दुर्नीता कुलपांशुना ।
न दद्या पुनराहृत्तैरानिहन्म्येतान् पशूनिव ॥४६॥
इत्युदीर्य महावीर्य समुत्थाय यमोपमः ।
पचालकिष्किन्धिनृप वधावायुधमुत्क्षिपन् ॥४७॥
किष्किन्धिनः सुकेशाद्या अन्ये विजयसिंहतः ।
रणायोत्तस्थिरे विद्याधराः पौरुषदुर्द्धराः ॥४८॥

दन्तादन्तिप्रवृत्ते मै रक्तस्फुलिङ्गीकृताम्बरः ।
कुन्ताकुन्तिमिलत्सादी शराशरिमिलद्रथी ॥४६॥
खड्गाखड्गप्रापतत्पत्ति रक्तसृक्यं किलभूतलः ।
रणस्ततः प्रवृत्ते कल्पान्त इव दारुणः ॥५०॥ युग्मं॥
चिरं युद्वाथबाणेन किष्किन्धवरजोऽन्धकः ।
शिरोविजयसिंहस्यापातयत्फलवत्तरोः ॥५१॥
नेमुश्च विजयसिंहगृह्याविद्याधरेश्वराः ।
निर्नाथानां कुतः शौर्य्यं हतं सैन्यं ह्यनायकम् ॥५२॥
श्रीमालां समुपादाय जयश्रियमिवाङ्गिनीम् ।
ययावुत्पत्यकिष्किन्धिः किष्किन्धां सपरिच्छदः ॥५३॥
श्रुत्वा पुत्रवधोदन्तमकाण्डाशनि पातवत् ।
वेगेनाशनिवेगोगादधिकिष्किन्धिपर्वतम् ॥५४॥
किष्किन्धां नगरीं सैन्यैः सचावेष्टदनैकशः ।
महाद्वीपस्थलीं द्वीपवतीपूर इवाम्बुभिः ॥५५॥
गुहाया इव पञ्चास्यो योद्धुकामौ सहान्धकौ ।
वीरौ सुकेशकिष्किन्धौकिष्किन्धायानिरीयतुः ॥५६॥
ततः सर्वाभिसारेण शनिवेगोऽत्यमर्षणः ।
योद्धुं प्रवृत्ते वीर स्तृणवद्गणयन्परान् ॥५७॥
ततो विजयसिंहेभ सिंहस्याजिमुखेऽच्छिदत् ।
शिरोऽन्धकस्य रोषान्धोऽशनिवेगो महाभुजः ॥५८॥

ततो वानरसैन्यानि रक्षःसैन्यानि दिशोदिशं ।
पवनास्फालिताम्भोद पटलानीवदुद्रुवुः ॥५८॥
सान्तःपुरपरीवारौ लङ्काकिष्किन्धनायकौ ।
पातालङ्का ययतुः क्वाप्युपायोपसर्पणम् ॥६०॥
निहत्यसतद्धन्तारमाराधरमिवद्विपः ।
प्रशान्तकोपः समभूद्रथनूपुरपार्थिवः ॥६१॥
मुदितोवैरिनिर्घातान्निर्घातं नामखेचरम् ।
सराजस्थापनाचार्योलङ्काराज्येन्यवेशयत् ॥६२॥
ततो निवृत्यवैताढ्ये स्वपुरे रथनूपुरे ।
अमरेन्द्रोऽमरावत्यामिवागादशनिर्नृपः ॥५३॥
अन्येद्युर्जातसंवेगोऽशनिवेगनृपः स्वयम् ।
सहस्रारसुते राज्यं न्यस्य दीक्षामुपाददौ ॥६४॥
पुर्यां पातालङ्कायां सुकेशस्यापि सूनवः ।
इन्द्राण्यामभवन्मालीसुमाली माल्यवानिति ॥६५॥
श्रीमालायां च किष्किन्धे द्वौ बभूवतु रात्मजौ ।
नाम्नादित्यरजाश्चारुक्षरजाश्चेति महाभुजौ ॥६६॥
अपरेद्युश्च किष्किन्धिः सुमेरोशाश्वतार्हताम् ।
यात्रां कृत्वा निवृत्तः सन्नपश्यन् मधुपर्वतम् ॥६७॥
किष्किन्धिर्विष्वगुद्याने तत्र मेराविवापरे ।
मनोरमे मनोरन्तुं विश्रामाधिकाधिकम् ॥६८॥

निधाय किष्किन्ध्यपुरं तस्योपरि पराक्रमी ।
न्यवासीत्स्वपरीवारः कैलास इव यक्षराट् ॥ ६९॥
पुत्रास्तेपि सुकेशस्य राज्यं श्रुत्वारिनिर्हृतम् ।
क्रुधा तयोऽग्नय इव जज्वलु वीर्यशालिनः ॥७०॥
ते समागत्य लङ्कायां निर्घातं खेचरं रणे ।
न्यगृह्नन् स्वत्यवेद्विष्वा द्वौरैवैरं चिरादपि ॥७१॥
ततश्च पुर्यां लङ्कायां राजा माली तदा भवत् ।
राक्षसद्वीपमुख्यानां द्वीपानामेकशासिता ॥७२॥
इतश्च वैताढ्यगिरौ नगरे रथनूपुरे ।
सहस्रारनरेन्द्रस्याशनिवेगाङ्गजन्मनः ॥७३॥
भार्य्यायाश्चित्रसुन्दर्या गर्भे कश्चित्सुरोत्तमः ।
अच्युत्वावातरत्सद्योदृष्टे स्वप्नमङ्गले ॥७४॥ युग्मं॥
काले च दोहदस्तस्याः शक्रसम्भोगलक्षणः ।
दुष्पूरोदुर्वचश्चाभू देहदौर्बल्यकारणम् ॥७५॥
निर्बन्धेन तु साप्टष्टा कथञ्चिदपि दोहदम् ।
कथयामासतं पत्ये लज्जावनमदानना ॥७६॥
सहस्रारः सहस्राक्ष रूपं निर्मायविद्यया ।
सहस्राक्ष इतिख्यातः पूरयामासदोहदम् ॥७७॥
असूत समये सूनु मनूनभुजविक्रमम् ।
इन्द्र इत्युक्तनामानमिन्द्रसम्भोगदोहदात् ॥७८॥

सम्प्राप्त यौवनायास्मै विद्याविनयशीलता ।
ददौ राज्यं सहस्रारः स्वयं धर्मरतोऽभवत् ॥७९॥
सर्वान् ससाधयामास विद्याधरनरेश्वरान् ।
इन्द्रमन्यश्च समभूदिन्द्रदोहदजन्मतः ॥८०॥
दिक्पालांश्चतुरश्चक्रे ससानी कान्यनीकपात् ।
तिस्रः परिषदो वज्रमस्त्रमैरावणं द्विपम् ॥८१॥
रम्भादिका वारवधूर्मन्त्रिणञ्च बृहस्पतिम् ।
नैगमेषिसमाख्यञ्च पत्त्यनीकस्य नायकम्॥८२॥युग्मं
एवं विद्याधरैरिन्द्रपरिवाराभिधाधरैः ।
इन्द्रोऽहमेवेतिधिया सोऽखण्डं राज्यमन्वसात् ॥८३॥
माकरध्वनिरादित्यकीर्त्तिकुक्षिसमुद्भवः ।
तत्राभूत्सोमदिक्पालः प्राच्यां ज्योतिःपुरेश्वरः ॥८४॥
वरुणामेघरथयोः पुत्रः पश्चिमदिक्पतिः ।
वंभूववरुणो विद्याधरो मेघपुरेश्वरः ॥८५॥
तनयः सूरकनकावल्योरुत्तरदिक्पतिः ।
कुवेर इति विख्यातोऽभूत्काञ्चन पुरेश्वरः ॥८६॥
कालाग्नि श्रीप्रभासूनु किष्किन्ध नगराधिपः ।
अभूदप्राच्यां दिक्पालो यम इत्यभिधानतः ॥८७॥
विद्याधरेन्द्रमिन्द्रतमिन्द्रोऽहमितिमानिनम् ।
गन्धेभोऽन्यमिभमिव नसे हेमालिभूपतिः ॥८८॥

भ्रातृभिश्च मन्त्रिभिश्च मित्रैश्चातुलविक्रमैः।
सच चालेन्द्रयुद्धाय नान्यो मन्त्रोहि दोष्मताम्॥८९।
सिंहद्विपाश्व महिषवराहवृषभादिभिः।
यानैः प्रचेलुः सैन्येऽपिरक्षोवीराः सवानराः॥९०॥
रिष्टाः खराः फेरवश्च सारसाश्च ववासिरे।
दक्षिणस्था अपि फले तेषां वामत्वधारिणः॥९१॥
अन्यान्यप्यशकुनानि दुर्निमित्तानि चाभवत्।
माली सुमालिनावारिप्रयाणाच्च सुमेधसा॥९२॥
अवज्ञायवचस्तस्य मालीदोर्बलगर्वितः।
जगाम वैताढ्यगिराविन्द्रमाल्हास्त चाजये॥९३॥
इन्द्रोप्यैरावणारूढः पाणिनोल्लालयन्पविम्।
सेनानाथैर्नैगमेषि प्रमुखैः परिवारितः॥९४॥
सोमाद्यैर्लोकपालैश्च विविधायुधधारिभिः।
विद्याधरभटैश्चान्वै रणक्षेत्रमुपाययौ॥९५॥युग्मं॥
इन्द्रराक्षससैन्यानां सम्फेटोऽभूत्परस्परम्।
तडिन्निभास्त्र भीष्माणामम्भोदानामिवाम्बरे॥९६॥
निपेतुः स्यन्दनाः क्वापि शिखराणीवभूभृताम्।
पलायंत गजाः क्वापि वातोद्धूता इवाम्बुदाः॥९७॥
पेतुर्भटानां मूर्द्धानोराहुशङ्काप्रदाः क्वचित्।
क्षतैकपादा क्वाप्यश्वाश्चेलुः सन्त्रानता इव॥९८॥

अमर्षादिन्द्रसैन्येन मालिसैन्यमभज्यत ।
बलवानपि किं कुर्यात् प्राप्तः केशरिणा करी ॥९९॥
अथ रक्षःपतिर्माली सुमालिप्रमुखैस्ततः ।
सयूथ इव वन्यैभः ससंरम्भोऽभ्यधावत ॥२००॥
गदामुद्गरनाराचैः करकैरिव वारिदः ।
उपदुद्रावेन्द्रचमूं सवीर्यद्विपेश्वरः ॥१॥
सलोकपालः सानीकः सानीकपतिरुच्चकैः ।
इन्द्रोऽप्यैरावणारूढोऽढौके रणकर्मणा ॥२॥
स इन्द्रो मालिना लोकपालप्रभृतयः पुनः ।
सुमालिप्रमुखैः सार्द्धं योद्धुमारेभिरे भटाः ॥३॥
तेषां चिरमभूद्युद्धं प्राणसंशयकृन्मिथः ।
जयाभिप्रायिणां प्रायः प्राणाहि तृणसन्निभाः ॥४॥
इन्द्रोद्रागथनिर्दम्भरणो दम्भोलिनावधीत् ।
विद्युते वाम्बुदोऽमोघां मालिनं वीर्यमालिनम् ॥५॥
हते मालि निर्विवेश राक्षसावानराश्च ते ।
सुमाल्यधिष्ठितास्थेयुर्लङ्कां पातालवर्त्तिनीम् ॥६॥
विश्रवः सूनवे सद्यः कौशिकाकुक्षिजन्मने ।
लङ्कां वैश्रवणायादादिन्द्रः स्वञ्च पुरं ययौ ॥७॥
पुर्यां पातालङ्कायां तिष्ठतश्च सुमालिनः ।
प्रीतिमत्यां सधर्मिण्यां जज्ञे रत्नश्रवा सुतः ॥८॥

संप्राप्तयौवनो रत्नश्रवा रम्य मथान्यदा।
जगाम कुसुमोद्यानं विद्यासाधनहेतवे ॥९॥
तत्रैकान्त रम्यस्थाने सोऽक्षमालाधरो जपन्।
नासाग्रन्यस्त दृक्तस्थौ वालेखित इव स्थिरः ॥१०॥
इत्थञ्च तस्थुषे तस्मैकापि तस्थौ समीपतः।
विद्याधार्य न विद्याङ्गी कुमारी पितृशासनात् ॥११॥
तदानीञ्च महाविद्या नाम्ना मानवसुन्दरी।
अस्मिसिद्धातवेत्युच्चै रत्नश्रवसमभ्यधात् ॥१२॥
रत्नश्रवाः सिद्धविद्यो जपमालां मुमोच च।
ददर्श च पुरस्थां तां विद्याधरकुमारिकाम् ॥१३॥
इहागाद्धेतुना केन कस्यवा कासिवेति च।
रत्नश्रवा वभाषेतां साप्येवं प्रत्यभाषत ॥१४॥
अनेक कौतुकागारे पुरे कौतुकमङ्गले।
विद्याधरपतिर्व्योम विन्दुर्नामास्ति विश्रुतः ॥१५॥
तस्यास्ति ज्यायसी पुत्री कौशिका नाम मेस्वसा।
ऊढा यज्ञपुरेशेन राज्ञाविश्रवसा तु सा ॥१६॥
तस्या वैश्रवणोनाम बभूव तनयो नयी।
राज्यं करोति लङ्कायां योधुनाशक्रशासनात् ॥१७॥
अहन्तु कैकसी नाम कौसिकायाः कनीयसी।
नैमित्तिकगिरा पित्रा दत्ता तुभ्यमिहागमम् ॥१८॥

आहूतवन्धुस्तत्रैवो पयेमेतां सुमालिसूः ।
पुष्पान्तकं पुरं न्यस्य चाऽस्थात् क्रीडं स्तवा सह ॥१९॥
अन्यदा कैकसी स्वप्ने विशन्तं स्वमुखे निशि ।
कुम्भिकुम्भस्थलीभेद प्रसक्तं सिंहमैक्षत ॥२०॥
तया तं स्वप्नमाख्यातं व्याख्यात्पत्न्यवाः प्रगे ।
स्वच्छस्ते विश्वशौण्डीरोऽभविष्यति महाभुजः ॥२१॥
तस्मादेनतरं स्वप्नात्सैत्यपूजां चकार सा ।
बभारच महासारं गर्भं रत्नश्रवः प्रिया ॥२२॥
तस्य गर्भस्य सम्भूतेः प्रभृत्यऽत्यन्त निष्ठुरा ।
वाणी बभूवाकैकस्या दृढ़म्चाङ्गं जितश्रमम् ॥२३॥
दर्पणे विद्यमानेपि सा पश्ये अम्ब दाननम् ।
आज्ञां दातुमभिप्रैपीत्सुरराज्येप्यशङ्कितम् ॥२४॥
विनापि हेतुं ञ्ङ्कारमुखरं सादधौसुखम् ।
अनामयन्न मूर्द्धानं कथञ्चिन्न गुरुष्वपि ॥२५॥
पिद्विषां मूर्द्धसुचिरं पादं दातुमियेप सा ।
इत्यादिदारुणान् भावान् दधेगर्भप्रभावतः ॥२६॥
प्रतिपद्यामनोरथं कुर्वाण स्तनयस्तया ।
कोधिकः द्वादशसमा सहस्रायुरजन्यतः ॥२७॥
उद्पताङ्गिकाशपुञ्जेन स्वोजाः कं पयन्मभीम् ।
उत्थानशयनद्वामपाद्कोफनदोऽस्य सः ॥२८॥

भीमेन्द्रेण पुरा दत्तं नवमाणिक्यनिर्मितम् ।
च कर्ष पाणिनाहारं पार्श्वस्थितकरण्डकात् ॥२९॥
कंठे चिक्षेपतं हारं बालः सहजचापलात् ।
जगाम विस्मये तेन कैकसी सपरिच्छदः ॥३०॥
रत्न अव च समाख्यौ राक्षसेन्द्रेण यः पुरा ।
मेघवाहनराजाय दत्तस्त्वत्पूर्वजन्मने ॥३१॥
अद्य यावद्दैव तावद्योऽपूजि तव पूर्वजैः ।
न शाक्यावोढुमान्ये यो नवमाणिक्यनिर्मितः ॥३२।
यस्य नागसहस्रेण निधानमिवरक्ष्यते ।
हार आकृष्यकंटेसौ सोक्षेपि शिशुनातव॥३३॥ त्रिभिर्विशेषकं
नवमाणिक्यसंक्रांत तत्क्षणमुखत्वात्तस्य ।
नामधेयं दशमुख इतिरत्नश्रवाव्यधात् ॥३४॥
शशांसचैव यन्मेरौ चैत्यवन्दनहेतवे ।
सुमालिना गतवता पृष्टस्ता तेन कोप्यृषिः ॥३५॥
चतुर्ज्ञानभृदित्याख्य हारन्त्वत्पूर्वजन्मना ।
यो वोढा नवमाणिक्यं सोर्द्धचक्रीभविष्यति ॥३६॥
कैकसी सुषुपेनाथ भानुस्वप्ने न सूचितम् ।
भानुकर्ण इतिः सूनुं कुम्भकर्णापराभिधाम् ॥३७॥
चन्द्रतुल्यनखत्वेन नाम्ना चन्द्रनखा पुनः ।
ख्यातं सूर्पनखालोके कैकसी सुषुवेसुताम् ॥३८॥

विपाके विगते काले पुनश्चासूत कैकसी ।
पुत्रं विभीषणं नाम्ना शशाङ्कस्वप्नसूचितम् ॥३९॥
साग्रषोडशधनुः समुन्नतास्ते त्रयोऽद्यहर्निशं सुतास्तया ।
रेमिरे गतभया यथासुखं क्रीडया वयसोऽनुरूपया ॥४०॥

इत्याचार्य्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्व्वणि राक्षसवंशवानरवंशोत्पत्तिरावणजन्मवर्णनो नाम प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

अथान्येद्युर्दशमुखः सानुजोऽपश्यदम्बरे ।
विमानारूढमायान्तमृद्धं वैश्रवणं नृपम् ॥१॥
कोऽयमित्यनुयुक्तां तं तेन माता ब्रवीदिति ।
कौशिकाया मम ज्येष्ठभगिन्या ह्येष नन्दनः ॥२॥
विश्रवोनामधेयस्य विद्याधरपतेः सुतः ।
सर्व्वविद्याधरेन्द्रस्येन्द्रस्याग्रसुभटो ह्ययम् ॥३॥
भवत्पितामहज्येष्ठं हत्वेन्द्रो मालिनं रणे ।
लङ्कां स राक्षसद्वीपां ददावस्मै च नः पुरीम् ॥४॥

ततः प्रस्थितिलङ्कायाः प्रायैरुक्तत मनोरथः ।
दृष्टाश्लितोवपितावत्सयुक्तं मत्तो हि पिच्छदः ॥५॥
लङ्कां सराक्षसद्वीपां सहपातालल‌ङ्कया ।
विद्यां च राक्षसीं नाम पूर्वजन्मात्मजन्मने ॥६॥
रक्षो वंशादिकं दाय मेघवाहनसूनुजे ।
राक्षसेन्द्रो ददौ भीमः प्रतीकाराय विद्विषाम्॥७॥यु
तस्यां हृतायां मान्नाय राजधान्याऽमरातिभिः ।
पितामह तिष्ठति ते पितापि च परासुवत् ॥८॥
अरक्षके क्षेत्र इवो क्षाणस्तस्याममरातयः ।
स्वैरञ्चरन्तीति सदा जीवत्कास्थित्यं पितुस्तव ॥९॥
कदाचतु सानुजस्तत गत्वा पैतामहासने ।
आसीनेऽइन्द्रयसे वत्स मयाका मन्दभाग्यया ॥१०॥
विलोक्य लङ्कालुण्ठाकां स्वरकारायान्नियंलितान् ।
शिरोमणिर्भविष्यामि कदा पुत्रवतीत्वहम् ॥११॥
एवं मनोरथैर्वत्स खपुष्पावचयोपमैः ।
काशीश्वाप्यऽहरहर्म्मरालीवमरौ गता ॥१२॥
अथैवमवद् द्रोपमीषणाच्चो विभीषणः ।
अलमातर्विषादेन नवेत्सि सुतविक्रमम् ॥१३॥
आर्यस्य दशकण्ठस्य पुरस्तादेवदोष्मतः ।
का इन्द्रो वैश्रवणः कः केन्ये विद्याधरा अपि ॥१४॥

अज्ञातपूर्व्विणा लङ्काराजंत्र सोढं द्विपामिदम् ।
दशास्येन प्रसुप्तेन सिंहेनेवैभगर्ज्जितम् ॥ १५॥
आस्तामार्य्यो दशग्रीवः परानतिभटानपि ।
अप्यार्यकुम्भकर्णोयं निःशेषी कर्तुमीश्वरः ॥१६॥
अस्त्वार्यकुम्भकर्णोऽपि तदादेशात्करोम्यहम् ।
द्विपामकाण्डे संहारं मातः मातः पवेरिवः ॥१७॥
अथोचे रावणोप्येवं दशनैरधरं दशन् ।
त्वं वज्रकठिनाऽस्यंऽस्वहृः शल्यमधाश्चिरम् ॥ १८॥
अप्येकवाङ्कस्याम्नातान् हन्यामिंद्रादिकान् द्विपः ।
शस्त्रशस्त्रिकथाप्यस्तु वस्तुतस्ते तृणं हिमे ॥१९॥
दोर्वीर्य्येणापि निर्ज्जेन्तुं यद्यप्यलमहं परान् ।
तथापि हि प्रयोक्तव्या विद्याशक्तिः क्रमागताः ॥२०॥
तद्विद्याः साधयिष्यामि निरवद्याः समन्ततः ।
अनुजानीहि यास्यामि तत्सिद्ध्यै सानुजोऽप्यहम् ॥॥
एवमुक्त्वा नमस्कृत्य पितरौ सानुजोपि सः ।
ताभ्यां च चुम्बितो मूर्ध्नि भीमारण्यमुपाययौ ॥२२॥
शयानः शयुनिःश्वास कम्पमानान्तिकद्रुमम् ।
द्दप्तशार्दूल लाङ्गूलाच्छोटस्फोटितभूतलम् ॥२३॥
अस्तोकघूक घूत्कारघोर भूरुहगह्वरम् ।
नृत्यद्भूतपदाघात पतद्गिरि तटोपलम् ॥२४॥

भयङ्करं दिविषदामप्येकं पद्मापदाम् ।
भ्रातृभ्यां सहितस्ताभ्यां तद्दरण्यं विवेश सः ॥२५॥ नि॰
ते जटामुकुटान्मूर्ध्नि धारयंतस्तपस्विवत् ।
अजस्रलधरा नाशावंघ्रावग्न्यस्तदृष्टयः ॥२६॥
श्वेतांशुकस्तोयासहितयेन तयोपि हि ।
सर्वकामप्रदामष्टाक्षरां विद्यामसाधयन् ॥ २७॥
दशकोटीसहस्राणि जपौ यस्य फलप्रदः ।
आरेभिरे ते जपितुं तं मन्त्रं षोडशाक्षराम् ॥२८॥
तदाम्बनाहृतो नाम जम्बूद्वीपपतिः सुरः ।
सान्तःपुरं क्रीडनाय तत्रायातो ददर्शतान् ॥२९॥
विद्यासाधनविघ्नाय तेषां बलाधिपः सतु ।
अनुकूलोपसर्गायप्रजिघाय स्वयोषितः ॥३०॥
तेषां क्षोभार्थमायाता स्तद्रूपै रतिसुन्दरैः ।
ताः क्षोभं स्वयमेवेयुर्विस्मृतस्वामिशासनाः ॥३१॥
निर्विकारान् स्थिराकारां स्तूष्णीकानवलोक्यतान् ।
अकालिमस्मरवेशविवशा स्ता बभाषिरे ॥३२॥
भो भो ध्यानजडा यूयं वलतः पश्यताग्रतः ।
देव्योपि च वशीभूताः का वः सिद्धिरतः परा ॥३३॥
किं विद्यासिद्धये वनस्तल्लेशेनामुनाङ्कतम् ।
किं करिष्यथ विद्याभिर्देव्यः सिद्धा वयं हि वः ॥३४॥